॥ श्रीः ॥

# अशौचनिर्णयः

## सान्वय मिथिला भाषा टीका सहितः ।

स्व० म० म० पं० वक्शी मुकुन्द शर्म्मणा संशोधितः ।

सोऽयम्

दरभङ्गा राजधान्याम्

**कन्हैयालाल कृष्णदासेन**

स्वकीये "श्रीरमेश्वर" यन्त्रालये,

श्री मधुसूदन शर्म्म द्वारा मुद्राप्य प्रकाशितः ।

सम्वत् २००३ M.Katyayana मूल्य =)॥

॥ श्रीगणेशाय नमः ॥



# अथाशौचनिर्णयः

नत्वाद्यां त्रिगुणाधीशां गुरुं शङ्कर रूपिणम् ।
सुखाय स्वल्पबुद्धीनां लिख्यतेऽशौचनिर्णयः ॥

अथ ब्राह्मणादि चतुर्वर्णानां सपिण्डाशौच-माह बृहस्पतिः ॥ शुद्धेद्विप्रोदशाहेन द्वादशाहेन भूमिपः ॥ वैश्यः पञ्चदशाहेन शूद्रोमासेन शुद्धयति ॥ १ ॥ त्रिरात्रेण सकुल्यास्तु स्नात्वा शुद्धयन्ति गोत्रजाः ॥

टीका—सपिण्डे ब्राह्मणे मृते ब्राह्मणो दशरात्रेण शुद्धयति । क्षत्रिये सपिण्डे मृते क्षत्रियो द्वादश-दिनेन । वैश्ये सपिण्डे मृते वैश्यः पञ्चदशदिनेन । शूद्रे सपिण्डे मृते शूद्रोमासेन शुद्धयति । ब्राह्मणादि चतुर्वर्णानां सकुल्ये मृते त्रिरात्रेण कुलजेमृते पक्षिणी गोत्रजे मृते स्नानमात्रेण शुद्धय[illegible] अ[illegible]कल्पतरौ ।

त्कृष्टवर्णस्त्रीषुजाताः शङ्करास्तेषां शूद्रवद्व्यवहारः ॥ केनचित् क्षत्रियेण दशाहाशौचमभ्युपेतं "सर्वेषा-म्युर्दशाहेनेति" वचनात् तदा तेषां ब्राह्मणवदेवा-शौचं जननमरणयोरनुसन्धेयम् । एवं कैश्चिद्वैश्यैः शूद्रैर्वा दशाहाशौचमेव पारम्पर्येणानुगृहीतं तेषां क्षत्रियजात्युक्तमेवाशौचं सुधीभिरुपदेष्टव्यमिति गोकुलनाथोपाध्यायाः ॥ व्यवहारोप्येवमेव ॥

( मि. भा. टीका ) सपिण्ड ब्राह्मणक मरणसन्ताँ ब्राह्मण दशदिन अर्थात् दश अहोरात्र व्यतीत सन्ताँ शुद्ध होइतअछि। तथा सपिण्ड क्षत्रियक मरणानन्तर क्षत्रिय बारहदिन व्यतीत भेलासन्ताँ शुद्धहोइत छथि। एवं सपिण्ड वैश्यक मरणानन्तर वैश्य पन्द्रह दिन में शुद्ध होइतछथि। तथा सपिण्ड शूद्रक मरणसन्ताँ शूद्र तीसदिनमें शुद्ध होइतअछि ॥ ब्राह्मण, क्षत्रिय, वैश्य, शूद्र, एहि चारू वर्णकें सकुल्यक मरणसन्ताँ त्रिरात्रा-शौच तथा कुलजक मरणसन्ताँ पक्षिणी अर्थात् दिनमें होइक तखन ओदिन तथा ताहि दिनक रात्रि आओर ओहिसँ अग्रिम केवल दिन अर्थात् सूर्यास्त पर्यन्त अशौच होइत अछि रात्रि में मरणसन्ताँ ओरात्रि तथा अग्रिम दिनक सम्पूर्ण दिन ओ समग्र रात्रि

अशौच रहैत अछि ॥ गोत्रजक मरण पश्चात् स्नान काल पर्य्यन्त अशौच मन्तव्य थीक। परन्तु एवं विध अशौच तखन मन्तव्य थीक जौं एक गाम में नहिं वसैतरही अन्यथा एक गाम में निवास रहलासन्ताँ सभकें सम्पूर्णाशौचे मन्तव्य थीक ई शिष्टव्यवहार-सिद्ध आधुनिक व्यवहार अछि ॥

* अथ सपिण्डादि लक्षणमाह मनुः *

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते ।
समानोदक भावस्तु निवर्त्तेताचतुर्द्दशात् ॥
जन्मनामस्मृतेरेके तत्परं गोत्रमुच्यते। शङ्खः॥
सपिण्डता तु सर्व्वेषां गोत्रतः साप्तपौरुषी ।
पिण्डश्चोदकदानञ्च शौचाशौचं तदानुगम् ॥
सरोज कलिकाधृत वचनम् ॥ द्विजातीनाञ्च सर्व्वेषां विज्ञेया साप्तपौरुषी । सपिण्डता ततः पश्चात् समानोदकधर्म्मता ॥

(टीका) बीजिनं पुरुषमारभ्य सप्तपुरुषमभिव्याप्य सर्व्वेषां सन्तानानां सपिण्डत्वम् एकस्यापि सपिण्डा-

धिकत्वे तेन समं सप्तमान्तर्गतस्यापि सापिण्डयं विनिवर्त्तते सर्वंयोगवदुभयनिष्ठत्वात् । सप्तपुरुषानन्तरं दशम पुरुषं यावत् सकुल्याः । तदूर्द्धं जन्मनाम्नोर्ज्ञाने कुलजाः । दश पुरुषानन्तरं जन्मनाम्नोरज्ञाने अस्मत्कुलजाइत्येवमाकारेण ज्ञानगोचराः गोत्रजाः ॥ कुमारीणां पितृसपिण्डम् । अकुमारीणां पतिसपिण्डम् सकुल्यादिकमप्येवम् ॥

( मि. टी.) बीजी पुरुषसँ सात पुरुष पर्य्यन्त सभ सन्तानकेँ अपनामेँ सपिण्डक धर्म्म मन्तव्य थीक । सात पुरुषसँ ऊपर दशम पुरुष पर्य्यन्त सकुल्य कहबैत अछि । दश सँ ऊपर अपन अपन बीजी पुरुषक नामादि ज्ञान रहय तथा परस्पर दयादत्व हो तावत् ओ कुलज कहबैत छथि । अन्यथा गोत्रज कहबैत छथि ॥ कुमारि कन्याकेँ पिताक जे सपिण्डादिक से ओहूकन्याक सपिण्डादि कहबैतछथि । तथा विवाहिता कन्याकेँ पतिक जे सपिण्डादिकसे हुनको सपिण्डादि ज्ञातव्य थीक ॥१॥

॥ अथाशौच शङ्करः ॥ तदात्र ब्रह्मपुराणे ॥

आद्यभावद्वयर्य्यावत् सूतकस्य तु सूतके । द्वितीये पतितेचाद्याच्छुद्धकाच्छुद्धिरिष्यते ॥

अतऊर्ध्वं द्वितीयात्तु सूतकान्ताच्छुचिःस्मृता ।

(टी.) दशाहाशौचे पञ्चमदिनपर्य्यन्तं द्वितीयं सजातीयं दशाहाशौचमापतति तदा पूर्व्वाशौचव्यपगमेन शुद्धिः । पञ्चमदिनानन्तरं नवमदिनपर्य्यन्तं यदि सजातीयं द्वितीयमशौचमापतति तदा द्वितीयाशौचव्यपगमेन शुद्धिः ॥ अत्राशौचान्तिमदिने अशौचान्तरोपनिपाते विशेषमाह विष्णुः "रात्रिशेषे दिनद्वयेन प्रभाते दिनत्रयेणे" ति ॥ अत्र रात्रिशब्दोऽहोरात्रपरः रात्रिरहोरात्रः शेषोयत्र तद्रात्रिशेषमशौचम् । अरुणोदयानन्तरं सूर्योदयं यावत् प्रातरिति श्राद्धरत्नाकरः । अरुणोदयकालमाह स्कान्दे ॥

उदयात्प्राक्चतस्रस्तु नाडिकाअरुणोदयः ।

(टी.) दशमदिने सजातीयाशौचनिपाते तद्दिनानन्तरं दिनद्वयेन शुद्धिः । दशमदिनरात्रिशेषे अरुणोदय वेलायां सम्पूर्णाशौचनिपाते सूर्य्योदयानन्तरं त्रिरात्रेण शुद्धिः । एकादशाहे सूर्य्योदयानन्तरं मुहूर्त्तद्वयाभ्यन्तरे सम्पूर्णाशौचपाते अग्रिमाशौचव्यपगमेन शुद्धिः, तदैव श्राद्धाधिकारश्च तद्दिन एव

मुहूर्त्तद्वयादूर्द्ध्वं श्राद्धसङ्कल्पे वृत्ते अशौचान्तरोपनिपाते आद्यश्राद्धं न प्रतिबद्ध्यते सङ्कल्पितत्वानिवृत्तेः। मासिकसपिण्डीकरणानि तु द्वादशाहेन भवेयुः श्राद्धसङ्कल्पे यथाकालमिति लेखनात्। एकादशाहे मुहूर्त्तद्वयादूर्द्ध्वं षोडशश्राद्धसङ्कल्पात्प्रागशौचान्तरोपनिपाते तदा श्राद्धपात प्रयुक्तदोषो दुर्निवारएव तदा गयायां श्राद्धकरणादेव कर्त्तुः पातित्यनिवृत्तिः "सपिण्डीकरणान्तानि प्रेतश्राद्धानि षोडश। यथाकालेन कार्य्याणि नान्यथामुच्यते हि सः॥ गयायाम्पिण्डदानेन प्रेतत्वं मुच्यते ध्रुवम्। अन्यथा पतितोज्ञेयः सर्वधर्म्मवहिष्कृत" इति वचनात्। एवं क्षत्रियादीनां त्रयाणां सम्पूर्णस्वस्वाशौचपूर्व्वार्द्धे समानव्यापकाशौचनिपाते पूर्व्वाशौचव्यपगमेन शुद्धिः। तदूर्द्ध्वमशौचान्तिमदिनपर्य्यन्तं यदि द्वितीयं तादृशाशौचमापतति तदा द्वितीयाशौचव्यपगमेन शुद्धिः। शेषं पूर्व्ववत्॥

सजातीययोरल्पदिनाधिकदिन व्यापकयोरशौचयोः सङ्करे अधिकदिनव्यापकाशौचान्तेन जननमरणाशौचयोः सङ्करेऽल्पदिनव्यापकेनापि मरणाशौचेनातीतेन शुद्धिः॥

तदाह कूर्म्म पुराणे ।

अघानां यौगपद्येन ज्ञेयाशुद्धिर्गरीयसी ।
मरणोत्पत्तियोगे तु गरीयोमरणम्भवेत् ॥

अत्रेदं तात्पर्यम् जननाशौचे मरणाशौचनिपाते अल्पदिनव्यापकेनापि मरणाशौचेन शुद्धिः । त्र्यहाद्य-शौचे समकालिकाशौचान्तरोपनिपाते द्वितीय-व्यपगमेन शुद्धिः । स्त्रीणां पतिमरणे पुत्रजन्मनि च विंशतिदिनेभ्य ऊर्द्ध्वं कन्याजन्मनि मासादूर्द्ध्वं पाकादौ श्राद्धादिकर्म्मणि चाधिकारः "सूतिकाम्पुत्र-जननीं विंशतिरात्रेण स्नातां सर्व्वकर्म्माणि कारयेदि" ति पैठीनसिवचनात ॥

( मि. टी. ) दश दिनक अशौच में पाँच दिन पर्य्यन्त द्वितीयदशाहाशौच सम्प्राप्त हो तखन पूर्वमृत मनुष्यक कार्य्यँ पश्चात मृतमनुष्यक कार्य्यो हयवा योग्य थीक । पञ्चमदिन सँ ऊपर नवमदिनपर्य्यन्त द्वितीय सम्पूर्णाशौच प्राप्त हो तखन द्वितीय मृतमनुष्य क कार्यँ प्रथम मृतमनुष्यक कार्य्य ह - ोक चाही । दशम दिनमें द्वितीय सम्पूर्णाशौच प्राप्त हो तखन को

दिन आओर अग्रिम दुइदिन अशौच रहैत अछि ।
दशमदिनक रात्रिशेषमें अर्थात् चारिदण्ड रात्रि बाँकी
रहय ताहि सँ उपरान्त सूर्योदयक निकट पर्यन्त
द्वितीय सम्पूर्णाशौच प्राप्त हो तखन रात्रि शेष वाला
दिन तथा सूर्योदय सँ अग्रिमक तीन दिन अशौच
रहैत अछि ॥ एवं क्षत्रिय वैश्य शूद्र एहि तीनू वर्णक
स्वकीय स्वकीय अशौचक पूर्वार्द्ध में द्वितीय अशौचक
संप्राप्तिहो तखन प्रथमक कार्य्यें द्वितीयक कार्य्य आओर
अपन अपन अशौचक परार्द्धमें द्वितीय अशौच प्राप्तहो
तखन परक कार्यँ प्रथमक कार्य्य हयवाकचाही ॥ आओर
विचार ब्राह्मणक विचारवत् जानी ॥ सम्पूर्ण्णाशौच मैं
त्रिरात्राशौचक प्राप्ति हो तखन अधिक दिन व्यापक
अशौचक समाप्ति पर्य्यन्त अशौच । एवं जननाशौचमें
मरणाशौचक प्राप्ति हो अथवा मरणाशौच में जनना
शौच प्राप्त हो तखन बहुत दिन अथवा अल्प दिन
व्यापक मरणाशौच समाप्ति सन्ताँ जननाशौचक समाप्ति
होइत अछि ॥ त्रिरात्राशौचमें द्वितीय त्रिरात्राशौचक
प्राप्ति हो तखन द्वितीय त्रिरात्राशौचक समाप्ति
पर्य्यन्त अशौच मन्तव्य थीक । स्त्रीकें पतिक मरणसन्ताँ
अथवा पुत्रक जन्मसन्ताँ वीस दिनक उपरान्त तथा

कन्याक जन्ममें मासदिनक पश्चात पाकादि कर्म्म में अधिकार होइत छैक ॥ एकादशाह दिनमें अशौचक प्राप्ति हो लकर विचार संस्कृत में पूर्व्व स्पष्टरीति सँ देखाओल गेल अछि ॥

## ॥ अथ विदेशस्थाशौचम् ॥

मनुः । विगतन्तुविदेशस्थं शृणुयाद्योह्यह-न्निशम्‌ । यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवे-त्‌ ॥ अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत । सर्व्वंत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुद्ध्यति ॥ गौतमः ॥ श्रुत्वा चोर्द्ध्वं दशम्याः पक्षिणीति ॥ देवलः ॥ ऊर्द्ध्वंसर्व्वंत्सराद्वार्त्ता श्रूयते चेन्मृते स्वके । भवेदेकाहमेवात्र तच्च संन्यासिनं विना ॥

( टी. ) अत्रायं हेतुगर्भः अनतीताशौचकाले यदि विदेशस्थ मरणं श्रूयते तदा यदवशिष्टमशौच-कालस्य तावदशौचम्‌ । सम्पूर्णाशौचकाले अतीते षण्मासाभ्यन्तरे सपिण्डमरणं श्रूयते तदा त्रिरात्रेण शुद्धिः । षण्मासानन्तरं नवममासपर्य्यन्तं पक्षिणी ।

नवममासानन्तरं वर्षपर्यन्तमेकाहोरात्रम् । वर्षानन्तरं स्नानोदकदानमात्रम् । इदं सर्ववर्णानां सम्पूर्णाशौच विषयम् । असम्पूर्णऽप्यहाद्यशौचे तु अशौचाभ्यन्तरे मरणश्रवणे अवशिष्टाशौचकालेन शुद्धिः । ऽप्यहाद्य-शौचे व्यतीते सर्वत्र स्नानमुदकदानमात्रम् जननाशौ-चाभ्यन्तरे जनन श्रवणे अवशिष्टाशौचकालेन शुद्धिः जननाशौचकाले व्यतीते अशौचाभावः 'नाशौचं प्रसवस्यास्ति व्यतीतेषु दिनेष्वपी'ति देवलवचनात् ॥ एकाहेन यत्रत्यावार्त्ता न श्रूयते स विदेश इति रत्ना-करः । षष्टियोजनानन्तरदेशो देशान्तरः । षष्टियोजना-भ्यन्तरेऽपि भाषाभेद गिरिमहानदीव्यवधानानि भवंति तदपि देशान्तरम् ॥

(मि. भा.) विदेशमें मरणमन्ताँ अशौचक अभ्य न्तरमें निश्चय मरणकवार्त्ता हो तँ जतेकदिन अशौचमें बाँकीरहैक ततवेदिन अशौच रहैत अछि । सम्पूर्णा-शौचक व्यतीत सन्ताँ छओमासक अभ्यन्तरमें मरणक वार्त्ता श्रवण हो तँ त्रिरात्र तथा छओ मास सँ ऊपर नओ मासक अभ्यन्तर में मरण श्रवण हो तँ पक्षिणी नओ मास सँ ऊपर बारह मासक भीतरमें मरण श्रवण हो तँ एक अहोरात्र, एवं वर्षदिनक उपरान्त, मरण श्रवण

हो तँ स्नानकालपर्य्यन्त अशौच होइतअछि। परञ्च ई विचार सम्पूर्णाशौचक थीक। त्रिरात्रादिक अशौच म मरण श्रवणसन्ताँ अवशेष दिनपर्य्यन्त अशौच मन्तव्य थीक। त्रिरात्रादिक अशौच व्यतीत सन्ताँ मरण श्रवण हो तँ स्नान मात्र अशौच थीक। जनना-शौचमें जनन श्रावण हो तँ अवशेषदिनावधिक अशौच रहैत अछि। जननाशौचक व्यतीतसन्ताँ जन्म श्रवण हो तँ अशौच नहिं होइत अछि ॥

## अथ सपिण्डीकरण विचारः।

मृतपित्रादि पिण्डे मृतपिण्डादि मेलनं कर्त्तव्यम् स्त्रियास्तु पत्यौ जीवति सति श्वश्रु-प्रश्वश्रु वृद्धप्रश्वश्रुभिर्म्मेलनम् पत्यौ मृते पति-श्वशुरप्रश्वशुरैः सह मेलनमिति ॥

भाषा—एकर अर्थ स्पष्ट अछि।

## ❀ अथ बालाद्यशौचम् ❀

आदन्तजननात्सद्यः आचूडान्नैशिकीस्मृता।
त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परम् ॥ दन्त

जननकालः सप्तमोमासः। व्रतमुपनयनकालः स च षड्वर्षान्तः ॥ अङ्गिराः। विप्रे न्यूने त्रिभिर्व्वर्षैर्म्मृते शुद्धिस्तु नैशिकी। द्व्यहेन क्षत्रिये शुद्धिस्त्रिभिर्व्वैश्ये मृते सति ॥ शूद्रे त्रिभिर्व्वर्योन्न्यूने मृते शुद्धिस्तु पञ्चभिः। अत ऊर्ध्वं मृते शूद्रे द्वादशाहोविधीयते ॥ शंखः ॥ अनूढभार्य्यः शूद्रस्तु षोडशाद्वत्सरात्परम्। मृत्युं समधिगच्छन्ति मासं तस्यापि बान्धवाः। शुद्धिं समधि गच्छन्ति नात्र कार्य्या विचारणा ॥ अत्रेदन्तात्पर्य्यम्, सप्तमासाभ्यन्तरे बाले मृते सर्व्ववर्णानां सद्यः शौचम्। ब्राह्मणानां सप्तममासादारभ्य द्विवर्षय्यावदहोरात्रम् तदूर्द्ध्वं षड्वर्ष पर्य्यन्तं त्रिरात्रम् षड्वर्षानन्तरं त्रयाणां ब्राह्मणादीनां सम्पूर्णाशौचम्। क्षत्रियाणां सप्तम मासानन्तरं द्विवर्षय्यावत् त्र्यहम् तदनन्तरं षड्वर्षपर्य्यन्तं षडहः ॥ वैश्यानां द्विवर्षपर्य्यन्तं नवरात्रम् शूद्राणां

द्विवर्षपर्य्यन्तं पञ्चाहं तदूर्ध्वं षोड़श वर्षपर्य्यन्तं द्वादशाहम् तदूर्द्ध्वं मासमशौचम् विवाहिते तु मासमेवाशौचम् तत्र वर्षनियमोनास्तीति ॥

अथ सर्व्ववर्णानां द्विवर्षपर्य्यन्तं कन्यामरणे सद्यः शौचम् तदनन्तरं विवाह पर्य्यन्तमेकाहोरात्रम् । वाग्दानानन्तरं पितृकुले पतिकुले च त्रिरात्रम् ॥ एकर अर्थ सरल संस्कृत में स्पष्ट अछि ॥

इति मैथिल सम्प्रदायसिद्धोऽशौचनिर्णयः ।

१ पृ. ३ पं. १९ में लिखित "परन्तु" इत्यादिक लेख "न वर्द्धयेदघाहानि" इत्यादि धर्म्मशास्त्रविरोधे अमूलक आनथ, प्रत्युत उचिताधिक अशौच मानने नित्यादि कर्मत्याग मूलक प्रायश्चित्तक तथा अशौच—संकर में बड़े गड़बड़क सम्भव ॥

"श्रीरमेश्वर" प्रेस, दरभंगा में श्रीमधुसूदन शर्मा द्वारा मुद्रित